# निवेदन

कई वर्ष पहले जब दक्षिणदेशोंमें भ्रमण कर रहा था, उस समय में दक्षिणवासियों में यह श्रीराम-नामसंकीर्तन सुनकर मुग्ध हो गया। हमारे देशमें भी जिससे इसका अभ्यास और प्रचार बाहुल्य हो, इसी उद्देश्यसे पुस्तकाकार इसका प्रकाशन और मठमें इसके प्रथम संकीर्तन का प्रयास किया गया है। यह आनन्द का विषय है कि आज बंगदेशके स्थान स्थानमें इसकी आवृत्ति और आदर हो रहा है। इसलिये मूल उद्देश्य यदि पूर्ण रूप में साधित नहीं हुआ तो भी उसके आंशिक रूपमें सफल होने में कोई सन्देह नहीं है। —

प्रकाशक—

बढ़ती हुई मांग देखकर यह बात और भी सिद्ध
जाती हैं। इस थोड़े समयमें ही इसके अने
संस्कार हो गये हैं। आशा है कि इसके पाठ
भगवद भक्ति की वृद्धिमें सहायता मिलेगी।

पूज्यपाद स्वामी विवेकानन्दजी की बड़ी इच्
थी कि वंगदेशमें ब्रह्मचर्य्यमूर्ति श्रीश्रीमहावीरज
की उपासना का प्रचार हो। इसी लिये हमलोगों
मठमें इस नामका संकीर्तनके पूर्व श्रीश्रीमहावीरज
की आराधनाका नियम किया है। हमारा अनुरो
है कि दूसरे लोग भी इसका पालन करें। अखए
ब्रह्मचर्य्य पालन पूर्वक भगवद प्रीतिके अधिकार
होकर जन्मभूमिको पवित्र और धन्य कीजिये यह
हृदय की एकान्त प्रार्थना है।

बेलूर मठ } स्वामी ब्रह्मानन्द।

श्रीनाथे जानकीनाथे ह्यभेदः परमात्मनि।
तथापि मम सर्वस्वः रामः कमललोचनः॥

श्री श्रीरामचन्द्राय नमः।



# स्तवः

वर्णानामर्थसंघानां

रसानां छन्दसामपि।

मङ्गलानां च कर्त्तारौ

वन्दे वाणीविनायकौ॥

भवानीशङ्करौ वन्दे

श्रद्धाविश्वासरूपिणौ।

याभ्यां विना न पश्यन्ति

सिद्धाः स्वान्तस्थमीश्वरम्॥

वन्दे बोधमयं नित्यं
गुरुं शंकररूपिणम् ।
यमाश्रितो हि वक्रोऽपि
चन्द्रः सर्वत्र वन्द्यते ॥

सीतारामगुणग्राम-
पुण्यारण्यविहारिणौ ।
वन्दे विशुद्धविज्ञानौ
कवीश्वरकपीश्वरौ ॥

उद्भवस्थितिसंहार-
कारिणीं क्लेशहारिणीम् ।
सर्वश्रेयस्करीं सीतां
नतोऽहं रामवल्लभाम् ॥

यन्मायावशवर्ति विश्वमखिलं
ब्रह्मादिदेवाः सुराः।
यत्सत्त्वादमृषैव भाति सकलं
रज्जौ यथाहेर्भ्रमः॥
यत्पादः प्लवमेव भाति हि
भवाम्भोधेस्तितीर्षावताम्।
वन्देऽहं तमशेषकारणपरं
रामाख्यमीशं हरिम्॥
प्रसन्नतां या न गताऽभिषेकत-
स्तथा न मम्लौ वनवासदुःखतः।
मुखाम्बुजश्री रघुनन्दनस्य मे
सदास्तु सा मञ्जल मंगल प्रदा।

नीलाम्बुजं श्यामलकोमलाङ्गं
सीतासमारोपितवामभागम् ।
पाणौ महाशायकचारुचापं
नमामि रामं रघुवंशनाथम् ॥

मूलं धर्मतरोर्विवेकजलधेः
पूर्णेन्दुमानन्ददम् ।
वैराग्याम्बुजभास्करं ह्यघघन-
ध्वान्तापहं तापहम् ॥
मोहाम्भोधरपुंजपाटनविधौ
खे संभवं शङ्करम् ।
वन्दे ब्रह्मकुलं कलङ्कशमनं
श्रीरामभूपप्रियम् ॥

सान्द्रानन्दपयोदसौभगतनुं
पीताम्बरं सुन्दरम् ।
पाणौ बाणशरासनं कटिलसत्-
तूणीरभारं वरम् ॥
राजीवायतलोचनं धृतजटा-
जूटेन संशोभितम् ।
सीतालक्ष्मणसंयुतं पथिगतं
रामाभिरामं भजे ॥
कुन्देन्दीवरसुन्दरावतिबलौ
विज्ञानधामावुभौ ।
शोभाढ्यौ वरधन्विनौ श्रुतिनुतौ
गोविप्रवृन्दप्रियौ ॥

मायामानुषरूपिणौ रघुवरौ
सद्धर्मवन्तौ हि तौ ।
सीतान्वेषणतत्परौ पथिगतौ
भक्तिप्रदौ तौ हि नः ॥
ब्रह्माम्भोधिसमुद्भवं कलिमल-
प्रध्वंसनं चाव्ययम्
श्रीमच्छंभुमुखेन्दुसुन्दरवरे
संशोभितं सर्वदा ॥
संसारामयभेषजं सुमधुरं
श्रीजानकीजीवनम् ।
धन्यास्ते कृतिनः पिबन्ति सततं
श्रीरामनामामृतम् ॥

शान्तं शाश्वतमप्रमेयमनघं
निर्वाणशान्तिप्रदं ।
ब्रह्माशम्भुफणीन्द्रसेव्यमनिशं
वेदान्तवेद्यं विभुम् ॥
रामाख्यं जगदीश्वरं सुरगुरुं
मायामनुष्यं हरिम् ।
वन्देऽहं करुणाकरं रघुवरं
भूपालचूडामणिम् ॥
केकीकण्ठाभनीलं सुरवरविलसद्-
विप्रपादाब्जचिह्नम् ।
शोभाढ्यं पीतवस्त्रं सरसिजनयनं
सर्वदा सुप्रसन्नम् ॥

पाणौ नाराचचापं कपिनिकरयुतं
बन्धुना सेव्यमानम् ।
नौमीड्यं जानकीशं रघुवरमनिशं
पुष्पकारूढरामम् ॥

आर्त्तानामार्त्तिहन्तारं
भीतानां भयनाशनम् ।
द्विषतां कालदण्डन्तं
रामचन्द्रं नमाम्यहम् ॥

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददलायताक्षं
रामं निशाचरविनाशकरं नमामि ।

वैदेहीसहितं सुरद्रुमतले
हैमे महामण्डपे ।
मध्ये पुष्पक आसने मणिमये
वीरासने सुस्थितम् ॥
अग्रे वाचयति प्रभञ्जनसुते
तत्त्वं मुनीन्द्रैः परम् ।
व्याख्यातं भरतादिभिः परिवृतं
रामं भजे श्यामलम् ॥

# प्रार्थना ।

नान्या स्पृहा रघुपते हृदयेऽस्मदीये
सत्यं वदामि च भवानखिलान्तरात्मा ।
भक्तिं प्रयच्छ रघुपुङ्गव निर्भरां मे
कामादिदोषरहितं कुरु मानसं च ॥

# संकीर्तनम् ।

---

ओं श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेत
श्रीरामचन्द्रपरब्रह्मणे नमः ।

# श्रीनामरामायणम् ।

## बालकाण्डम् ।

---

१ । शुद्धब्रह्मपरात्पर राम
२ । कालात्मकपरमेश्वर राम
३ । शेषतल्पसुखनिद्रित राम
४ । ब्रह्माद्यमरप्रार्थित राम

५ । चण्डकिरणकुलमण्डन राम

६ । श्रीमद्दशरथनन्दन राम

७ । कौशल्यासुखवर्द्धन राम

८ । विश्वामित्रप्रियधन राम

९ । घोरताटकाघातक राम

१० । मारीचादिनिपातक राम

११ । कौशिकमखसंरक्षक राम

१२ । श्रीमदहल्योद्धारक राम

१३ । गौतममुनिसंपूजित राम

१४ । सुरमुनिवरगणसंस्तुत राम

१५ । नाविकधावितमृदुपद राम

१६ । मिथिलापुरजनमोहक राम

१७। विदेहमानसरञ्जक राम
१८। त्र्यम्बककार्मुकभञ्जक राम
१९। सीतार्पितवरमालिक राम
२०। कृतवैवाहिककौतुक राम
२१। भार्गवदर्पविनाशक राम
२२। श्रीमदयोध्यापालक राम

---

स्वामी शंकरानंद तीर्थ। स्वर्गाश्रम।

# अयोध्याकाण्डम्।

२३। अगणितगुणगणभूषित राम
२४। अवनीतनयाकामित राम
२५। राकाचन्द्रसमानन राम
२६। पितृवाक्याश्रितकानन राम
२७। प्रियगुहविनिवेदितपद राम
२८। तत्क्षालितनिजमृदुपद राम
२९। भरद्वाजमुखानन्दक राम
३०। चित्रकूटाद्रिनिकेतन राम
३१। दशरथसंततचिंतित राम
३२। कैकेयीतनयार्थित राम

३३। विरचितनिजपितृकर्मक राम
३४। भरतार्पितनिजपादुक राम

---

## अरण्यकाण्डम्।

---

३५। दण्डकवनजनपावन राम
३६। दुष्टविराधविनाशन राम
३७। शरभङ्गसुतीक्ष्ण अर्चित राम
३८। अगस्त्यानुग्रहवर्धित राम
३९। गृध्राधिपसंसेवित राम
४०। पंचवटीतटसुस्थित राम

४१ । शूर्पणखार्त्तिविधायक राम
४२ । खरदूषणमुखसूदक राम
४३ । सीताप्रियहरिणानुग राम
४४ । मारीचार्त्तिकृदाशुग राम
४५ । विनष्टसीतान्वेषक राम
४६ । गृध्राधिपगतिदायक राम
४७ । शबरीदत्तफलाशन राम
४८ । कबन्धबाहुच्छेदन राम

---

## किष्किन्ध्याकाण्डम्।

---

४९। हनुमत्सेवितनिजपद राम
५०। नतसुग्रीवाभीष्टद राम
५१। गर्वितवालिसंहारक राम
५२। वानरदूतप्रेषक राम
५३। हितकरलक्ष्मणसंयुत राम

---

## सुन्दरकाण्डम् ।

---

५४ । कपिवरसंततसंस्मृत राम
५५ । तद्गतिविघ्नध्वंसक राम
५६ । सीताप्राणाधारक राम
५७ । दुष्टदशाननदूषित राम
५८ । शिष्टहनूमद्भूषित राम
५९ । सीतावेदितकाकावन राम
६० । कृतचूड़ामणिदर्शन राम
६१ । कपिवरवचनाश्वासित राम

## युद्धकाण्डम्।

६२। रावणनिधनप्रस्थित राम
६३। वानरसैन्यसमावृत राम
६४। शोषितसरिदीशार्थित राम
६५। विभीषणाभयदायक राम
६६। पर्वतसेतुनिबन्धक राम
६७। कुम्भकर्णशिरश्छेदक राम
६८। राक्षससंघविमर्दक राम
६९। अहिमहिरावणचारण राम
७०। संहृतदशमुखरावण राम
७१। विधिभवमुखसुरसंस्तुत राम
७२। खस्थितदशरथवीक्षित राम

७३। सीतादर्शनमोदित राम
७४। अभिषिक्तविभीषणनत राम
७५। पुष्पकयानारोहण राम
७६। भरद्वाजाभिनिषेवण राम
७७। भरतप्राणप्रियकर राम
७८। साकेतपुरीभूषण राम
७९। सकलस्वीयसमानत राम
८०। रत्नलसत्पीठास्थित राम
८१। पट्टाभिषेकालंकृत राम
८२। पार्थिवकुलसंमानित राम
८३। विभीषणार्पितरंगक राम
८४। कीशकुलानुग्रहकर राम

८५। सकल जीवसंरक्षक राम
८६। समस्त लोकाधारक राम

## उत्तरकाण्डम्।

८७। आगतमुनिगणसंस्तुत राम
८८। विश्रुतदशकण्ठोद्भव राम
८९। सीतालिङ्गननिर्वृत राम
९०। नीतिसुरक्षितजनपद राम
९१। विपिनत्याजितजनकज राम
९२। कारितलवणासुरवध राम
९३। स्वर्गतशम्बुकसंस्तुत राम
९४। स्वतनयकुशलवनन्दित राम

९५। अश्वमेधक्रतुदीक्षित राम
९६। काकावेदितसुरपद राम
९७। आयोध्यकजनमुक्तिद राम
९८। विधिमुखविबुधानन्दक राम
९९। तेजोमयनिजरूपक राम
१००। संसृतिबन्धविमोचक राम
१०१। धर्मस्थापनतत्पर राम
१०२। भक्तिपरायणमुक्तिद राम
१०३। सर्वचराचरपालक राम
१०४। सर्वभवामयवारक राम
१०५। वैकुण्ठालयसंस्थित राम
१०६। नित्यानन्दपदस्थित राम

१०७ । राम राम जय राजा राम
१०८ । राम राम जय सीता राम

---

भयहर मंगल दशरथ राम
जय जय मंगल सीता राम
मङ्गल कर जय मङ्गल राम
संगत शुभ विभवोदय राम
आनन्दामृत वर्षक राम
आश्रित वत्सल जय जय राम
रघुपति राघव राजा राम
पतित पावन सीता राम

# स्तवः

कनकाम्बर कमलासनजनकाखिल धाम
सनकादिक मुनिमानस सदनानघ भूम
शरणागत सुरनायक चिरकामित काम
धरणीतल तरण दशरथनन्दन राम
पिशिताशन वनितावध जगदानन्द राम
कुशिकात्मज मखरक्षण चरिताद्भुत राम
धनिगौतमगृहिणी स्वजदघमोचन राम
मुनिमण्डल बहुमानित पद पावन राम
स्मरशासन सुशरासन लघुभञ्जन राम
नरनिर्जरजनरञ्जन सीतापति राम

कुसुमायुध तनुसुन्दर कमलानन राम
वसुमानित भृगुमम्भव मदमर्दन राम
करुणारस वरुणालय नतवत्सल राम
शरणं तव चरणं भवहरणं मम राम

---

# प्रणामः

आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्
रामाय रामचन्द्राय रामभद्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥

---

अतुलितबलधामं स्वर्णशैलाभदेहम् ।
दनुजवनकृशाणुं ज्ञानिनामग्रगण्यम् ॥
सकलगुणनिधानं वानराणामधीशम् ।
रघुपतिवरदूतं वातजातं नमामि ॥

गोष्पदीकृतवारीशं मशकीकृतराक्षसम्।
रामायणमहामालारत्नं वन्देऽनिलात्मजम्
अञ्जनानन्दनं वीरं जानकीशोकनाशनम्
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥
उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥
मनोजवं मारुततुल्यवेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शिरसा नमामि ॥

आञ्जनेयमतिपाटलाननं
काञ्चनाद्रिकमनीयविग्रहम्।
पारिजाततरुमूलवासिनं
भावयामि पवमाननन्दनम्॥
यत्र यत्र रघुनाथकीर्त्तनं
तत्र तत्र कृतमस्तकाञ्जलिम्।
वाष्पवारिपरिपूर्णलोचनं
मारुतिं नमत राक्षसान्तकम्॥ओं॥

इति अष्टोत्तरशतनामरामायणं समाप्तम्।

